e-pathshala पाठशाला
A Gateway to all Post Graduate Courses

| विषयः (Subject) | संस्कृतम् (Sanskrit) | |
|---|---|---|
| पत्रसंख्या (Paper Number) | 1 | |
| पत्रविषयः (Title) | वैदिकभाषा तथा वाङ्मयं च<br>(Vedic Language & Literature) | |
| पाठ्यांशसंख्या पाठ्यांशनाम<br>(Module Number& Module Name) | 20, अथर्ववेदीयोपनिषदः<br>(The *Upanishads* Attached to the *Atharvaveda*) | |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | **१- उपनिषदां परिचयः।**<br>**२-प्रश्नमुण्डकमाण्डूक्योपनिषदां वैशिष्ट्यम्।** | |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) | |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः | |
| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
| प्रो.हरिहरत्रिवेदी,<br>आचार्यः,पौरोहित्यविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली 110016 | डा. रामराज उपाध्यायः,<br>सहाचार्यः,पौरोहित्यविभागस्य<br>श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-विद्यापीठम्, नवदेहली 110016 | प्रो.पी.एन्.शास्त्री,<br>कुलपतिः,<br>राष्ट्रियसंस्कृतसंस्थानम्<br>नवदेहली |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P1_M20 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

**विषय-सूची**






| | |
|---|---|
| संस्कृतम् | पत्रम् – 1, वैदिकभाषा तथा वाङ्मयं च |
| | पाठ्यांशसंख्या- 20, अथर्ववेदीयोपनिषदः |

1.0-**प्रस्तावना**-

उपनिषद् शब्दस्यार्थः रहस्यं भवति। आध्यात्मविद्यारहस्यप्रतिपादकानां वेदविभागानाम् उपनिषद् संज्ञाभवति। सर्वोपनिषदां मध्ये सारमष्टोत्तरशतमिति मुक्तिकोपनिषदा ज्ञायते, सर्वासूपनिषत्सु अष्टोत्तरशतमुपनिषदः सारयुक्तमुपनिषदस्सन्ति। उक्तासूपनिषत्सु अष्टोत्तरशतमुपनिषदः मुख्यास्सन्ति। प्राप्यते यद् ऋग्वेदस्य दश उपनिषदः, शुक्लयजुर्वेदस्य एकोनविंशति उपनिषदः, कृष्णयजुर्वेदस्य द्वात्रिंशदुपनिषदः, सामवेदस्य षोडशोपिनषदः, अथर्ववेदस्य च एकत्रिंशदुपनिषदस्सन्ति। यथा-

| **क्रमः** | **वेदः** | **उपनिषद्-संख्या** | |
|---|---|---|---|
| 1. | ऋग्वेदः | 10 | (दश) |
| 2. | शुक्लयजुर्वेदः | 19 | (एकोनविंशतिः) |
| 3. | कृष्णयजुर्वेदः | 32 | (द्वात्रिंशत्) |
| 4. | सामवेदः | 16 | (षोडशः) |
| 5. | अथर्ववदः | 31 | (एकत्रिंशत्) |
| | | 108 उपनिषदः (अष्टोत्तरशतम्) | |

मुण्डकोपनिषदि प्राप्यते-

**ईश-केन-कठ-प्रश्न-मुण्ड-माण्डुक्य-तितिरिः।**
**ऐतरेयं च छान्दोयं बृहदारण्यकं दश॥**

वर्त्तमाने तिस्र उपनिषदः अथर्ववेदस्य प्राप्यन्ते। यासां नामानि प्रश्न-मुण्डक माण्डुक्योपनिषदस्सन्ति। आसां तिस्रणामेव अथर्ववेदीयोपनिषदः।

2.0-**उपनिषदां सामान्य परिचयः**-

उपनिषदां ज्ञानाय चतुर्धा विभाज्यन्ते। प्राचीनगद्योपनिषदः, प्राचीनपद्योपनिषदः, उत्तरकालिकगद्योपनिषदः आथर्वणोपनिषदश्च। आसां विवेचनमीत्थं प्राप्यते-

(क) **प्राचीनगद्योपनिषदः**- अस्मिन् ब्राह्मणग्रन्थानां कतिपयानां गद्यात्मकांशानां संग्रहोऽस्ति। यथा- 1.बृहदारण्यकोपनिषद्, 2.छान्दोग्योपनिषद्, 3.तैत्तिरीयोपनिषद्, 4.ऐतरेयोपनिषद्, 5.कौषीतकि-उपनिषद्, 6.केनोपनिषच्च।

(ख) **प्राचीनपद्योपनिषदः**- अस्मिन् कतिपयानां गद्यात्मकांशानां संग्रहो विद्यते। यथा- 7.कठोपनिषद्, 8. ईशोपनिषद्, 9. श्वेताश्वेतरोपनिषद्, 10. महानारायणोपनिषच्च।

(ग) **उत्तरकालिकगद्योपनिषदः-** 11. प्रश्नोपनिषद्, 12. मैत्रायणीयोपनिषद्, 13. माण्डुक्योपनिषच्चेति।

(घ) **आथर्वणोपनिषदः-** 1.सामान्योपनिषद्, 2.योगोपनिषद्, 3.सांख्यवेदान्तोपनिषद्, 4.शैवोपनिषद्, 5. वैष्णवोपनिषद् 6.शाक्तोपनिषच्च।।

सर्वासामुपनिषदां मूलमुद्देश्यमस्ति ब्रह्मज्ञानपूर्वकं परमपुरुषार्थस्य प्राप्तिः। पुरुषार्थचतुष्टये धर्मार्थकाममोक्षश्च स्वीक्रियते।

3.0-**प्रश्नोपनिषदि तृतीयप्रश्नपर्यन्तं वर्ण्यविषयाः-**

अथर्ववेदीयपिप्पलादशाखीयब्राह्मणभागस्यान्तरे प्रश्नोपनिषद् आगच्छति। अस्मिन्नुपनिषदि सुकेशा इत्यादयः षट् ऋषयस्सन्ति। एतेषां सर्वेषां ऋषीणां प्रश्नानामुत्तराणि क्रमश एकैकस्मिन् प्रश्ने विद्यते। अत्र त्रयाणामृषीणामुपरि अर्थात् त्रिषु प्रश्नेषु वर्ण्यविषयानां विवेचनमित्थमस्ति।

भद्रं कर्णेभिरिति वैदिकेन मन्त्रेण अस्योपनिषदः प्रारम्भो भवति। अनन्तरं प्रथमं प्रश्नमारभ्यते- **ॐ सुकेशा च भारद्वाजः शैव्यश्चसत्यकामः सौर्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः।।**

अत्र उच्यते भरद्वाजस्य पुत्रः सुकेशा, शैव्यस्य पुत्रः सत्यकामः, गर्गगोत्रीयः सौर्यायणी, कौसलदेशीय आश्वलायनः, विदर्भदेशीयः भार्गवः, कत्यस्य प्रपौत्रः कबन्धी चैते षट् ऋषयः ब्रह्मजिज्ञासया महर्षिपिप्लादं प्रत्यगच्छन्। तेषामभिप्रायः विज्ञाय ऋषिणोक्तम् भवन्तः तपस्विनस्सन्ति तथापि ममाश्रमे वर्षैकपर्यन्तं ब्रह्मचर्यस्य पालनपूर्वकं तपश्चर्यां कुर्वन्तु। तदन्तरं स्वेच्छया प्रश्नाः पृच्छन्तु। यथाज्ञानमहमुत्तराणि प्रदास्यामि। उक्तेन प्रकारेण सर्वे ऋषयः वर्षैकपर्यन्तं तस्मिन्नाश्रमे वासं कृत्वा प्रश्नानां पृच्छणार्थं मुनिं पार्श्वं समुपस्थिता अभवन्। तत्रादौ कत्यऋषेः प्रपौत्रः कबन्धीऋषिः प्रश्नाः समुपस्थापितवन्तः।

तत्र प्रथमे प्रश्ने प्रजोत्पत्तिः, जगतः उत्पतिः, सूर्यचन्द्रमा इत्युभयोः विषये प्राणाः रयिश्चोभयो दृष्टिकथनम्, परमेश्वरस्योपासनाप्रकारः, मासादौप्रजापतिर्ट्र्ष्टिः, सत्यपालनादिश्च प्रश्नाः पृष्टाः।

द्वितीये प्रश्ने भार्गवस्य त्रय प्रश्नाः तृतीये च प्रश्ने आश्वलायनस्य षट् प्रश्नास्सन्ति। तत्र भार्गवस्य त्रिषु प्रश्नेषु प्राणदेवस्य श्रेष्ठता निरूपणम्, परमेश्वरस्योपासनायाः महत्त्वम्, प्राणानां स्तुतिश्च

विद्यते। आश्वलायनस्य षट्सुप्रश्नेषु प्राणानां शरीरे प्रवेशविधिः, प्राणस्योत्पत्तिः, प्राणापानादि वासस्थानानि, परलोकगमनम्, परकायाप्रवेशः, पुनः स्पष्टीकरणम्, प्राणविषयकोज्ञानस्य लौकिक परलौकिकयोः फलानुवर्णनम्।

सर्वेसां प्रश्नानामुत्तराणि दत्वा आचार्याः पिप्पलादमहोदयाः वदन्ति- य एवं विद्वान्प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति तदेव श्लोकः।। अर्थात् अनेन प्रकारेण प्राणानां रहस्यस्यावबोधनं कृत्वा सर्वविधसंरक्षणं करोति यः, तस्यावहेलनं न करोति, तस्य जनस्य सन्तानपरम्परा विनष्टं न भवति, शक्तिसम्पन्नं भूत्वा स्वजीवनं सार्थकं करोति।

4.0-**प्रश्नोपनिषदि चतुर्थप्रश्नतः षट्प्रश्नपर्यन्तं वर्ण्यविषयाः-**

चतुर्थे प्रश्ने गर्ग्यमुनिना प्रश्नाः समुत्थापितास्सन्ति। तत्र गर्ग्यः पृच्छति- भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिञ्जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति। अनेन प्रकारेणास्मिन् प्रश्ने जीवात्मा परमात्मा विषयः , सुषुप्तिकाले इन्द्रियाणां स्थानं मनः, मनस्थितानां वर्णनम्, जीवात्माद्वारा घटनानामनुभवः, जीवात्माद्वारा निद्राजनितसुखस्यानुभवः, परमेश्वरस्यनिरूपणम्, परमशान्तिकथनञ्च वर्णितास्सन्ति।

पञ्चमे प्रश्ने सत्यकामस्य प्रश्नास्सन्ति। तस्मिन् प्रश्ने ओँकारस्योपासना, अपरब्रह्मस्वरूपे ओँकारस्य वर्णनम्, ओँकारस्योपासकानां साधकानां कृते फलस्य कथनम्, एकमात्रासंयुक्त-ओँकारोपासनया पृथ्वीलोके महत्ताप्राप्तेरुल्लेखः, द्विमात्रा संयुक्त ओँकारोपासनया चन्द्रलोके ऐश्वर्यप्राप्तेरुल्लेखः, त्रिमात्रासंयुक्त ओँकारोपासनया परमपुरुषस्य साक्षात्कारस्य उपासनायाश्च रहस्यम्, ओँकारोपासनायाः उपसंहारः वर्णितास्सन्ति।

षष्ठे प्रश्ने सुकेशामहोदयस्य प्रश्नास्सन्ति। अत्र षोडशकलायुक्तपरमेश्वरस्य निरूपणमस्ति। पुरुषोत्तमस्य तत्वस्यावबोधनाय सृष्टिक्रमस्य प्रलयस्य च वर्णनम्, जन्ममृत्योरभावश्योल्लेखः, उपदेशस्योपसंहारश्च सञ्जातः। षड्भिर्ऋग्भिः कृतज्ञताप्रकाशनम् ऋषिवन्दनापूर्वकञ्चशान्तिपाठद्वारा प्रश्नोपनिषद समाप्तिमगच्छत्।।

अत्र षोडशकलाविषये पिप्लाद् ऋषेः कथनं साररूपेणेत्थमस्ति-

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।**
**तं वेद्य पुरुषं वेद यथा मा वो मृत्युः परिव्यथ।।** इति।।

अस्य शब्दार्थः इत्थमस्ति-

रथनाभौ-रथचक्रस्य नाभे आधारोपरि, अराः इव- यथा अराः स्थिताः भवन्ति, यस्मिन्-यस्मिन्, कलाः- प्रसिद्धः, प्रतिष्ठिताः- सर्वथा स्थितं भवति, तम्- पुरुषम्, वेद्यम्-ज्ञानयोग्यः, वेदः-ज्ञानं कुर्यात्, यथा- यथा, वः- त्वम्, मृत्युः- मृत्युः, मा परिव्यथा इति- सुखेन दुःखं न स्यात्।

अत्र सारांश अस्ति यथा रथचक्रे स्थिताः अराः रथस्य नाभौ प्रविशन्ति तथैव षोडश तस्या अनन्तरं सांसारिकी पीडा न बाधते इति सम्।

5.0-**मुण्डकोपनिषदि प्रथममुण्डकस्य वर्ण्य-विषयाः-**

अथर्ववेदस्य मन्त्रभागस्याभ्यान्तरे मुण्डकोपनिषद् अस्ति। अस्मिन् त्रयः मुण्डकास्सन्ति। एकैकेषु मुण्डकेषु द्वौ-द्वौ खण्डौ स्तः। अत्र प्रथममुण्डकस्य वर्ण्यविषयानां निरूपणमित्थं प्राप्यते-

प्रथममुण्डकस्य प्रथमे खण्डे प्रथमं सूत्रमस्ति ॐ ब्रह्मा देवानामित्यद्याथर्वणोपनिषत् अर्थात् अथर्ववेदस्येयमुपनिषद्। अत्रादौ ब्रह्मविद्यापरम्पराया उल्लेख अनेन प्रकारेण प्राप्यते-

**ॐ ब्रह्मा देवानां प्रथमः सम्बभूव-**
**विश्वस्य कर्ता भुवनस्य गोप्ता।**
**स ब्रह्म विद्यां सर्वविद्याप्रतिष्ठा-**
**मथर्वाय ज्येष्ठपुत्राय प्राह॥**

अर्थात् सर्वप्रथमं ब्रह्मा विश्वस्य कर्ता भुवनस्य गोप्ता रक्षणकर्ता चाभवत्। स सर्वासां विद्यानामाधाररूपेण ब्रह्मविद्या अथर्वाय ज्येष्ठ्यपुत्राय उक्तवान्। विश्वस्य कर्ता इत्युक्ते सर्वेषां देवतानाम्, महर्षिणाम्, प्रजापतित्यादीनाञ्च कर्ता आसन् ब्रह्मा। भुवनस्य गोप्ता इत्युक्ते जगतः निर्माणं कृत्वा अस्य जगतः रक्षणं कथं भवेदित्युपायोपि कृतवान्। ब्रह्मणः सर्वप्रथमः पुत्रः महर्षि अथर्वा आसीत्। सर्वप्रथमं ब्रह्मविद्याया उपदेशः अथर्वार्षये कृतवान्। किमुपदेशः कृतवानित्यग्रिमे सूत्रे प्राप्यते-

तस्मै सहोवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च महर्षि शौनकस्य प्रश्ने अङ्गिरा ऋषेः कथनमस्तीदम् इयं विद्या अथर्वाऋषिद्वारा अङ्गी ऋषिं प्रति गतवती ततः भरद्वाजस्य पुत्रः सत्यवहस्य पार्श्वमागतवती। ततो परम्परा क्रमेण अङ्गिरां प्रत्यागच्छत्। अङ्गिरां प्रतिप्रश्नः करोति शौनकः। तर्ह्यत्र अंगिराशौनकयोः संवादः विद्यते-




अनेन प्रकारेण साररूपेणैवं प्राप्यते विद्या द्विधा भवति परा विद्या अपरा विद्या च। परा विद्या विषये प्राप्यते- ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणम् निरूक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते। आभिः विद्याभिः अक्षरं नक्षरति यं तं परमेश्वरं अधिगन्तुं तत्वतः ज्ञातुं शक्यते। अत्र चतुर्णां वेदानां षण्णां वेदाङ्गानाञ्च वर्णनं प्राप्यन्ते।

प्रथममुण्डकस्य द्वितीये खण्डे अग्निहोत्रस्य दर्शपौर्णमासस्य, चातुर्मास्यस्य, आग्रयणस्य, वैश्वदेवस्य च कर्मणां सम्पादनमधिकारीणां कृतेरावश्यकमस्तीति प्रतिपादितमस्ति। तत्र अग्निहोत्रार्थं निर्धूमेऽग्नौ यस्मिन् सप्तजिह्वाः भवन्ति तस्मिन् हवनं कर्तव्यः।

**काली कराली च मनोजवा च**
**सुलोहिता या च सुधुम्रवर्णा।**
**स्फुलिङ्गनी विश्वरुची च देवी**
**लेलायमाना इति सप्तजिह्वाः॥**

अत्र जिह्वानामानि काली- कराली- मनोजवा- सुलोहिता- धूम्रवर्णा- स्फुलिङ्गिनी- विश्वरुची इत्यादयस्सन्ति।

**6.0 मुण्डकोपनिषदि द्वितीयमुण्डकस्य वर्ण्य-विषयाः -**

द्वितीये मुण्डके जगत उत्पत्तिः लयश्च वर्णितमस्ति। निराकारस्य परमेश्वरस्य स्वरूपस्य वर्णनम्, भगवतः विराट्स्वरूपस्य वर्णनम्, जगदुपत्तिक्रमस्य वर्णनम्, यज्ञादि साधना, पर्वतादिनामुत्पत्तिः, गुहाचरनाम्नः परमेश्वरस्य स्वरूपस्य वर्णनम्, रूपकानुवर्णनेन ब्रह्मरूपीलक्ष्यस्य बेधनप्रकारः, परं ब्रह्मणः स्थानस्य स्वरूपस्य च वर्णनम्, तस्य ज्ञानस्य महत्त्वम्, परमेश्वरस्य सर्वव्यापकता सर्वप्रकाशतां च संबंधिताः विषयाः उभयोर्खण्डयोर्वर्णितास्सन्ति।

अस्मिन् मुण्डके ब्रह्मणः विश्वरूपस्य वर्णनमीत्थं प्रत्यते-

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यो दिशः श्रोत्रे वाग्विवृताश्च वेदाः।**
**वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥**

अग्निर्द्युलोकः असौ वाव लोको गौतमाग्निः (छा. उ. 5.4.1) इति। अत्र अग्निः द्युलोकः यस्य मूर्धा अर्थात् शिर अस्ति। चन्द्रसूर्यो नेत्रे स्तः। तस्य श्रोत्रे दिश अस्ति। वाक् अस्ति वेदवाणिः, वायुः प्राण अस्ति, शाङ्करभाष्ये प्राप्यते- हृदयमन्तः करणं विश्वं समस्तं जगतः। पद्भ्यामेव पृथ्वी अस्ति। अनेन प्रकारेण सर्वभूतान्तरात्मापरमेश्वरस्य विराट्स्वरूपमित्थमस्ति।

**7.0-मुण्डकोपनिषदि तृतीयमुण्डकस्य वर्ण्य-विषयाः-**

तृतीयमुण्डकस्य प्रथमो मन्त्रः ऋग्वेदे (1.164.20.) अथर्ववेदे (9.14.20) च प्राप्येते। मन्त्र अस्ति-

**द्वा सुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्य**
**नश्नन्नन्यो अभिचाकशीति॥**

अस्य मन्त्रस्य शब्दार्थो विद्यते- सयुजा -सहैव वासः, सखायाः- परस्परः सखाभावयुक्तः, द्वा- द्वौ, सुपर्णा - पक्षी, समानम् वृक्षम् परिषस्वजाते- एकस्मिन्नेव वृक्षोपर्याश्रयं नीत्वा तिष्ठन्ति, तयोः - सप्तमी द्विवचनम् , अन्यः - अपरः , पिप्पलम् - वृक्षरूपी सुखदुःखात्मककर्मणां फलम् स्वादुः-

स्वादयुक्त:, अत्ति- उपभोगं करोति, अपर: - अन्य:, अनश्नन्- न भक्षितम्, अभिचाकशीति - केवलं दर्शनमेव करोति।

अस्य मन्त्रस्योपरि भाष्यं लिखन्ति भगवत्पादा: शङ्कराचार्या: - द्वा द्वौ सुपर्णा सुपर्णौ शोभनपत्तनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्वदा युक्तौ सखाया सखायौ समानव्याख्यानौ समानाभिव्यक्तिकारणौ एवं भूतौ सन्तौ समानविशेषमुपलब्ध्यधिष्ठानतयैकं वृक्षं वृक्षमिवोच्छेदनसामान्यच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ सुपर्णाविवैकं वृक्षं फलोपभोगार्थम्।।

अयं मन्त्र: अतीव प्रसिद्धमस्ति। अस्मिन् मन्त्रे इदं शरीरं अश्वथवृक्षोऽस्ति। अस्योपरि द्वौ पक्षिणौ विराजमानौ स्त: जीवात्मा परमात्मा च। द्वे शाखे विद्येते। शरीररूपीवृक्षे एकस्मिन्नेवस्थले जीवात्मा परमात्मना च विराजमानौ स्त। परञ्च तस्य शरीरस्योपर्येव प्रारब्धानुसारेण प्राप्तसुखदु:खस्योपभोग: जीवात्मा आसक्ति द्वेषपूर्वकञ्च करोति परमात्मा अनासक्तिपूर्वकं केवलं दर्शनं मात्रं कृत्वा करोति।

जीवात्मा वीतशोक: कथं भविष्यतीत्युपाय अग्रिमे मन्त्रे प्राप्यते। श्वेताश्वतरोपनिषद्यप्ययं मन्त्र: प्राप्यते-

**समाने वृक्षे पुरुषो निमग्नो-**
**ऽनीशया शोचति मुह्यमान:।**
**जुष्टं यदा पश्यत्यन्यमीश-**
**मस्य महिमानमिति वीतशोक:।।**

यावत् जीवात्मा परमात्मन: आश्रयं न नेष्यति तावत् सहैव वसनेऽपि सुखदु:खस्यानुभव: करिष्यति।

जीवात्मा परमात्मा इत्युभयो: मेलनं कथं भविष्यतीति विषये सूत्रधारस्य निरूपणं करोति षष्ठे मन्त्रे-

**सत्यमेव जयति नानृतं**
**सत्येन पन्था विततो देवयान:।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा।**
**यत्र तत् सत्यस्य परमं निधानम्।।**

अनेन प्रकारेण सत्यस्याश्रयं गृहीत्वा जीवात्मापरमात्मा उभयो मेलनेन जीवस्य कल्याण भविष्यति। द्वितीये खण्डे आत्मदर्शनस्य साधनं प्रतिपाद्यते-

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन**
**यमेवैष वृणुते तेन लभ्यः**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम्।।**

आत्मदर्शनस्य प्राप्तिः केवलं प्रवचनेन न भवति, बुद्ध्या न भवति अथवा नाधिकेनश्रवणेन भवति। यस्य प्राप्तेः इच्छां करोति तस्येच्छया एव प्राप्तिर्भवितुं शक्यते।

**नायमात्मा बलहीनेन लभ्यः**
**न च प्रमादात्तपसो वाप्यलिङ्गात्।**
**एतैरूपायैर्यतते यस्तु विद्वां-**
**तस्येष आत्मा विशते ब्रह्मधाम।।**

अनेन प्रकारेण मुण्डकोपनिषदि बहूनि प्रकरणानि सन्ति। सर्वेषां विवेचनं समयाभावान्न भवितुं शक्यते।

8.0-**माण्डुक्योपनिषदि वर्ण्य-विषयाः** -

माण्डुक्योपनिषद् अथर्ववेदीयः ब्राह्मणभागस्यान्तर्गते प्राप्यते। अस्मिन् द्वादशमन्त्राः सन्ति। मन्त्रदृष्टया लघुवर्तते परञ्चास्याः महत्त्वं न्यूनास्ति। अस्योपरि भगवान् गौडपादाचार्यस्य कारिका प्राप्यते। माण्डुक्योपनिषदि शाङ्करभाष्यं प्राप्यते। उभाभ्यां अद्वैतसिद्धान्तरसिकजनानां कृतेऽत्यन्तमुपादेयमस्तीयमुपनिषद्।

अस्मिन् ग्रन्थे चत्वारि प्रकरणानि सन्ति। येषु प्रकरणेषु क्रमशः एकोनत्रिंशत् (२९), अष्टात्रिंशत् (३८), अष्टचत्वारिंशत् (४८), शतञ्चकारिकाः (१००) प्राप्यन्ते। सर्वं सम्भूय अस्योपनिषदि गौडपादाचार्यमहोदयस्य पञ्चदशाधिकद्विशतं कारिकाः प्राप्यन्ते। अस्य प्रथमप्रकरणस्य नाम आगमप्रकरणमस्ति। अस्मिन् जगदुत्पत्तेः विविधानां प्रयोजनानां वर्णनं विद्यते। माण्डुक्योपनिषदि ॐकारं त्रिमात्रकं विद्यते। अ, उ, म इत्यक्षराणि सन्ति ॐ कारे।

द्वितीयं प्रकरणं वैतथ्यप्रकरणमस्ति। अस्मिन् सत्यासत्यनिरूपणपूर्वकं स्वप्नावस्थायां का गतिर्भवतीति सर्वमुक्तमस्ति। अनैकाभिः युक्तिभिः स्वप्नस्य मिथ्यात्वस्य सिद्धि अस्त्यस्य प्रकरणस्य वैशिष्टयम्। अनेन प्रकारेण तृतीयं प्रकरणमस्ति अद्वैतप्रकरणम्। अस्मिन् प्रकरणे अकार्पण्य निरूपणम् ,व्यावहारिको जीवभेदः त्रिविधाधिकारिणः, उपासनाविधिः अद्वैतात्मदर्शने अविरोधः सृष्टिश्रुतेः संगतिः सद्वस्तोः उत्पत्तिः तत्वबोधः शान्तवृत्तिस्वरूपः ब्रह्मणः स्वरूपम् अस्पर्शयोगस्य दुर्गमता, मनोनिग्रहस्य विधिः, मनोनिग्रहे विघ्नानि, परमार्थसत्यं किमस्तीत्यादि विषयाः वर्णितास्सन्ति।

चतुर्थं प्रकरणमस्ति अलातशान्तिप्रकरणम्। अस्मिन् नारायणनमस्कारः अद्वैतदर्शनस्य वन्दना द्वैतवादीनां परस्परविरोधः अजातवादनिरुपणं सदसदादिवादानामुत्पत्तिः हेतुफलयोः अनादित्वम् बाह्यार्थवाद निरुपणम् विज्ञानवादस्य खण्डनम्, प्रपञ्चस्य असत्यत्वे हेतुः, विज्ञानाभासे अलातस्फुरणस्य दृष्टान्तः, आत्मतत्वनिरूपणादिविषयाश्च विवेचितास्सन्ति।

ॐ इत्यस्य तत्वस्य निरूपणार्थम् आगमप्रकरणतः प्राप्यते।

**ॐइत्येतदक्षरमिदं सर्वं तस्योपकारकानां भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्रिकालातीतं तदप्योङ्कार एव।**

आत्मदर्शनं प्राप्यते आगमप्रकरणे –

**नान्तः प्रज्ञं बहिष्प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्यमग्राह्यमलक्ष्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः।** वैतथ्यप्रकरणे अज्ञाननिवृतिरेवात्मज्ञानमिति लिखितमस्ति। यथानिश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते। रज्जुरेवैति चाद्वैतं तद्वदात्मविनिश्चयः।

अद्वैतप्रकरणे मनोनिग्रहस्य विषये प्राप्यते –

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम्।**
**दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च।।**

आलातशान्तिप्रकरणे आत्मनः अनिर्वचनीयता प्रकटी क्रियते –

**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया।**
**तथा जाग्रद्द्वयाभासं चित्तं चलति मायया।।**

अनेन प्रकारेण तासु त्रिष्वुपनिषत्सु बहूनि ज्ञानानि प्राप्यन्ते।।